॥ श्री ॥

# श्री स्कन्द वेदपादस्तवः

# ஸ்ரீ ஸ்கந்த வேதபாதஸ்தவம்



*Publishers*

SRI SRINGERI MUTT,

SRINGERI, KADUR Dt. (Mysore State)

**Price: Re. 0-25.**

श्री

# श्री स्कन्द वेदपादस्तवः

## ஸ்ரீ ஸ்கந்த வேதபாதஸ்தவம்



SRI SRINGERI MUTT,
SRINGERI -KADUR DT. (MYSORE)

॥ ॐ ॥

# ॥ स्कन्द वेदपादस्तवः ॥



योदेवानां पुरोदित्सुः अर्थिभ्यो वरमीप्सितम् ।
अग्रे स्थितः स विघ्नेशो ममान्तर्हृदये श्रितः ॥ १ ॥

महः पुरा वैबुध सैन्धव श्रीशराटवी मध्य गतह्रदान्तः ।
श्रीकण्ठफालेक्षणजातमीडे तत्पुष्करस्यायतनाद्धिजातम् ॥ २ ॥

महो गुहाख्यं निगमान्तपङ्क्ति मृग्याङ्घ्रि पङ्करुह युग्ममीडे ।
सांबो वृषस्थस्सुतदर्शनोत्को यत्पर्यपश्यत्सरीरस्य मद्ध्ये ॥ ३ ॥

त्वामेव देवं शिवफालनेत्र महोविवर्त परमात्मरूपम् ।
तिष्ठन् व्रजन् जाग्रदहं शयानः प्राणेन वाचा मनसा बिभर्मि ॥ ४ ॥

नमो भवानीतनुजाय तेऽस्तु विज्ञानतत्वा मुनयः पुराणाः ।
यमेव शंभुं हरिमब्जयोनिं यमिन्द्रमाहुर्वरुणं यमाहुः ॥ ५ ॥

कोटीरकोटिस्थ महार्घ कोटि मणि प्रभाजालवृतं गुहं त्वाम् ।
अनन्यचेताः प्रणवाब्जहंसं वेदाहमेतं पुरुषं महान्तम् ॥ ६ ॥

सनोऽवतु स्वाळिकपङ्क्तिजीवग्रहंग्रहीतायितचन्द्रखण्डः ।
गुहादसीयं तदिदं स्वरूपं परात्परं यन्महतो महान्तम् ॥ ७ ॥

स्वर्गापागा मध्यग पुण्डरीकदळ प्रभा जैत्र विलोचनस्य ।
अक्ष्णां सहस्रेण विलोक्यमानं न सन्दृशे तिष्ठति रूपमस्य ॥ ८ ॥
हैमद्विषट्कुण्डलमण्डलाढ्यगण्डस्थलीमण्डिततुण्डशोभः ।
ब्रह्म त्वमेवेति गुहो मुनीन्द्रैः हृदामनीषा मनसाभिक्लृप्तः ॥ ९ ॥
सुपक्वबिम्बाधरकान्तिरक्तसन्ध्या मृगाङ्कायितदन्त पङ्क्तिः ।
गुहस्सनः पातु विलोलदृष्टिः येनावृतं खं च दिवं महीं च ॥ १० ॥
करीन्द्रशुण्डायित दोः प्रकाण्डद्विषट्क केयूर विराजमानम् ।
गुहं मृडानीभवमप्रमेयं न चक्षुषा पश्यति कश्चनैनम ॥ ११ ॥
स्वकीयदोर्दण्ड गृहीत चण्डकोदण्डनिर्मुक्त पृषत्कषण्डैः ।
त्रिविष्टपान्धं करणैरशून्यान् यस्सप्तलोकानकृणोद्दिशश्च ॥ १२ ॥
सौवर्णहारादि विभूषणोज्वलन् मणि प्रभालीढ विशाल वक्षाः ।
स्कन्दस्समां पातु जिताब्जयोनिः अजायमानो बहुधा विजायते ॥१३॥
देवस्सवैहारिकवेषधारी लीलाकृताशेष जगद्विमर्दः ।
शिखिध्वजः पातु भयङ्करेभ्यो यस्सप्तसिन्धूनदधात्पृथिव्याम् ॥ १४ ॥
षडाननो द्वादशबाहुदण्डः श्रुत्यन्तगामी द्विषडीक्षणाढ्यः ।
भीताय मह्यं गिरिजातनूजो हिरण्यवर्ण स्त्वभयं कृणोतु ॥ १५ ॥
यो दानवानीक भयङ्कराटवी समूलनोत्पाटन चण्डवातः ।
षाण्मातुरस्संहृत सर्व शत्रु रथैकराजो अभवज्जनानाम् ॥ १६ ॥
अतीव बालः प्रवयाः कुमारः वर्णीयुवा षण्मुख एकवक्त्रः ।
इत्थं महस्तत्बहुधाऽऽविरासी यदेकमव्यक्तमनन्तरूपम् ॥ १७ ॥

यदीयमायावरणाख्यशक्ति तिरोहितान्तःकरणाहि मूढाः ।
न जानते त्वां गुहतं प्रपद्ये परेणनाकन्निहितं गुहायाम् ॥ १८ ॥
गुरूपदेशाधिगतेन योगमार्गेण संप्राप्य च योगिनस्त्वाम् ।
गुहं परं ब्रह्म हृदंबुजस्थं विभ्राजदेतद्यतयो विशन्ति ॥ १९ ॥
यो देवसेनापति रादाराद्वै ब्रह्मादिभि र्देवगणै रभिष्टुतः ।
तं देवसेनान्यमहं प्रपद्ये विश्वं पुराणं तमसः परस्तात् ॥ २० ॥
हृदम्बुजान्तर्दहराग्रवर्ति कृशानुमध्यस्थपरात्मरूपात् ।
गुहात्सुसूक्ष्मान्मुनयः प्रतीयुरतःपरन्नान्य दणीयसँहि ॥ २१ ॥
तपःप्रसन्नेशबहुप्रदत्तवरप्रमत्तासुरभीतिभाजाम् ।
सुपर्वणां स्कन्द भवान् शरण्य इन्द्रस्य वृष्णो वरुणस्य राज्ञः ॥ २२
स एव देवो गिरिजाकुमारो राजा स मित्रं सहिनो वरेण्यः ।
भ्राता स बन्धुस्स गुरुः स्वसा च स एव पुत्रस्सपिता स माता ॥
स्वराज्यक्षत्रे स्वसुतां वितीर्य तां देवसेनां सुकुमारगात्राम् ।
आराधयत्यन्वहमांबिकेयं इन्द्रोहविष्मान्सगणो मरुद्भिः ॥ २४ ॥
देवेनयेनालघुविक्रमेण हतेषु सर्वेष्वपि दानवेषु ।
पुरेव देवा स्स्वपदोऽधिचक्रुरिन्द्रश्च सम्राट् वरुणश्च राजा ॥ २५ ।
षाण्मातुरोऽसौ जगतां शरण्यः तेजोऽन्नमापः पवनश्च भूत्वा ।
संरक्षणायैव जगत्सुदेवो विवेश भूतानि चराचराणि ॥ २६ ॥
करौ युवामञ्जलिमेव नित्यमुमाङ्गजाताय विधत्तमस्मै ।
एष प्रसन्नस्सुकुमारमूर्ति रस्मासुदेवो द्रविणं दधातु ॥ २७ ॥

निधिः कलाना मुदधिर्दयानां पतिर्जनानां सरणिर्मुनीनाम् ।
कदा प्रसीदेन्मयि पार्वतेयः पिता विराजा मृषभो रयीणाम् ॥ २८ ॥
सौन्दर्यवल्लीतनुसौकुमार्य सरोजपुष्पं धयमानसोयः ।
चचार कान्तार पथेषु देवः सनो ददातु द्रविणं सुवीर्यम् ॥ २९ ॥
इतोऽपि सौन्दर्यवदस्तु देहमिती व हुत्वा शिवफालनेत्रे ।
जातस्ततः किं सुकुमार एव कामस्तदग्रे समवर्तताधि ॥ ३० ॥
मुमुक्षुलोका श्शृणुत प्रियं वो भजध्वमेनं गिरिजाकुमारम् ।
अस्यैव देवस्य परात्मतेति हृदि प्रतीष्या कवयो मनीषा ॥ ३१ ॥
धेनूर्बह्वीः कामदोग्ध्रीस्सुवत्साः कुण्डोग्ध्रीर्गा देहि न स्त्वं सहस्रम् ।
भक्तार्तिघ्नं देवदेवं षडास्यं विद्माहि त्वा गोपतिं शूरगोनाम् ॥ ३२ ॥
वन्दामहे बर्हिणवाहनस्थितं वनीपकाशेषमनीषितप्रदम् ।
तोष्टूयमानं बहुधा पदे पदे संक्रन्दनेना निमिषेण जिष्णुना ॥ ३३ ॥
दिग्भ्यो दशभ्यः परितः पुनः पुनः परश्शतायातसिषेविषावक्षाम् ।
अनुग्रहायेव षडाननोह्यसौ प्रत्यङ्मुखास्तिष्ठति विश्वतोमुखः ॥ ३४ ॥
कूर्मः फणीन्द्रश्च तथा फणाभृतो दिग्दन्तिनश्चैव कुलाचला अपि ।
भूत्वाऽऽम्बिकेयः प्रथितः प्रतापवान् ब्रह्माध्यतिष्ठद्भुवनानि धारयन् ॥ ३५

यो वै स्कन्दःपृष्टश्शम्भो स्सत्यं ज्ञानं ब्रह्माद्वैतम ।
ओङ्कारार्थं प्राह स्मेत्थं सुब्रह्मण्योम् सुब्रह्मण्योम् ॥ ३६ ॥
यो जाह्नवीशरारण्य हृदाम्भोजे बभौ पुरा ।
तस्मै नमष्षण्मुखाय महासेनाय धीमहि ॥ ३७ ॥

यद्दक्षिणकरांभोजमिष्टदं स्वानुजीविनाम् ।
तेभ्य इन्द्रादि सेनानां सेनानिभ्यश्च वो नमः ॥ ३८ ॥
देवताना मृषीणां च भक्तानामपि योगिनाम् ।
भूतानामपि वीराणां पत्तीनां पतये नमः ॥ ३९ ॥
नमस्तेऽस्तु महासेन भीतेभ्यश्शूरपद्मनः ।
शुनासीरमुखिभ्यस्त्वं स्वस्तिदा अभयङ्करः ॥ ४० ॥
कटाक्षवीक्षणापास्त निखिल व्याधिबन्धन ।
देवसेनापते स्वामिन् अभित्वा शूरनूनुमः ॥ ४१ ॥
अन्तश्चरसिभूतेषु त्वमेकस्सूक्ष्मरूपतः ।
त्वमेव निगमान्तेषु परमात्मा व्यवस्थितः ॥ ४२ ॥
महीद्यौरन्तरिक्षं च वायुरापोऽनलोम्बरम् ।
सुब्रह्मण्य जगन्नाथ त्वयि सर्वं प्रतिष्ठितम् ॥ ४३ ॥
शैशवेत्वं महासेन बन्दीकृत्य प्रजापतिम् ।
अस्राक्षीस्तान् यथा पूर्वं मनुष्याः पशवश्च ये ॥ ४४ ॥
वेदान्तकन्दरीवर्तिगुहाशयषडानने ।
त्रिलोकीयं त्वयि विभो नावीवान्तस्समाहिता ॥ ४५ ॥
कला मुहूर्ताः काष्टाश्च मासा वर्षा युगानि च ।
त्वयि वल्लीशनिहिता निमेषा स्त्रुटिभिस्सह ॥ ४६ ॥
रोगकान्तारदावाग्ने मृत्युकक्षहुताशन ।
शूरघ्न त्वत्प्रतापेन रेजती रोदसी उभे ॥ ४७ ॥

परं ब्रह्म विचिन्वन्तो हृदयाम्भोजमध्यगम् ।
योगिनो नारदाद्या स्त्वां सदा पश्यन्ति सूरयः ॥ ४८ ॥
हतशूरमुखाशेषदैतेयं त्वां गुहाऽस्तुवन् ।
अग्ना विष्णू चेन्द्रवायू सोमो धाता बृहस्पतिः ॥ ४९ ॥
वाचालयस्यवाचं त्वं स चक्षुः कुरुषेऽदृशम् ।
आश्रितेभ्यो जगन्नाथ शिवोन्नस्सुमना भव ॥ ५० ॥
स एव जगतः कर्ता भर्ता हर्ता जगद्गुरुः ।
कुमारस्सच्चिदानन्दस्सोऽक्षरः परमस्स्वराट् ॥ ५१ ॥
असुरान् शूरपद्मादीन् हत्वा शरवणोद्भवः ।
देवान् स्व स्व पदे कृत्वा सम्राडेको विराजति ॥ ५२ ॥
तव दृष्ट्वा विश्वरूपं सहर्ष भयवेपथु ।
त्वा मस्तुवन्नादितेया बृहस्पति पुरोहिताः ॥ ५३ ॥
किन्नरा गरुडा नागा यक्षास्साध्या मरुद्गणाः ।
ऐन्द्रीशं त्वा महरहः विश्वेदेवा उपासते ॥ ५४ ॥
विश्वासान्मानुषीणाञ्च प्रजानां पशुपक्षिणाम् ।
चराचराणां जगतां ध्रुवो राजा विशामयम् ॥ ५५ ॥
अम्भोजसंवर्तिकासु राजहंसा इव प्रभो ।
मदीय हृदयाम्भोजे ध्रवस्तिष्ठाविचाचलिः ॥ ५६ ॥
लीलामात्रकृताशेष भुवना द्गिरिजासुतात् ।
अथर्वचाथ ऋक् सामे यजुस्तस्मादजायत ॥ ५७ ॥

तिले तैलमिव प्रोतो दध्न्याज्यमिव षण्मुखे ।
मणौ सूत्रमिवस्यूतो ब्रह्म विश्वमिदञ्जगत् ॥ ५८ ॥
यस्तपसादीन् ऋषीन् शापात् उद्दधार हरात्मजः ।
मातुस्तनसुधासारं पुत्रः प्रमुदितोधयन् ॥ ५९ ॥
इज्ययां पूजया स्तुत्या भक्त्या च परिचर्यया ।
ध्यानेन तपसा च त्वां देवं मर्ता स ईढते ॥ ६० ॥
श्रुतिस्मृत्यागमाद्युक्तकर्मणां फलदायिने ।
स्कन्दाय तुभ्यं मखिभिः श्रद्धया हूयते हविः ॥ ६१ ॥
मूर्धाद्यौरम्बरं नाभिः ऊरूभू रतलं पदे ।
षण्मुखस्येत्येव माहुः अन्तर्विश्वमिदंजगत् ॥ ६२ ॥
भक्तसन्तापशमनप्रावृषेण्यघनाघनात् ।
स्कन्दादन्यं मनो मागाः सद्दष्टो मृडयाति नः ॥ ६३ ॥
जिह्वे त्वमुच्चैर्निस्तन्द्रा रात्रिन्दिवमभिष्टुहि ।
देवमेनं महासेनं अदुग्धा इव धेनवः ॥ ६४ ॥
अकळङ्कशरच्चन्द्र विलसत्वन्मुखसंस्रुताः ।
मन्दस्मितसुधाधाराः तामे कृण्वन्तु भेषजम् ॥ ६५ ॥
देवानीजिमहे पूर्वं तपश्चकृमहे पुरा ।
यद्गुहो देवतास्माकं कविर्गृहपतिर्युवा ॥ ६६ ॥
मदीय हृदयांभोज निर्यूहमणिमञ्चके ।
षडानन त्वत्पादस्स्यात् इयान् प्रादेश सम्मितः ॥ ६७ ॥

चिरन्तनवचस्तुत्यः प्रणवाम्बुजषट्पदः ।
करोतु देवसेनेशः शिवानः प्रदिशोदिशः ॥ ६८ ॥
दैतेयवधसन्नद्धो भवान् पवनसारथिः ।
द्विलक्षमर्वतो हैमे रथे युक्त्वाधितिष्ठति ॥ ६९ ॥
गगनोच्छ्रित कोदण्ड किरीटं शूरमाहवे ।
बिभेदिथ त्वं नाराचैः सहस्रेण शतेन च ॥ ७० ॥
ऐशाल्ललाटनयना ज्जातं वह्निर्यथारणेः ।
मुमुक्षवो गुहं ब्रह्म विचिन्वन्तु मनीषया ॥ ७१ ॥
हिरण्यज्योतिषं स्कन्दं याचध्वं भो वनीपकाः ।
एषोऽर्थिनः पूरयति प्रजया च धनेन च ॥ ७२ ॥
सन्निर्धास्यति किं स्वामी भवानम्बुरुहेक्षणः ।
तावकं मञ्जुळं रूपं स्मर्यते न च दृश्यते ॥ ७३ ॥
यतस्त्वं जगतामेषां ईशिषे शिखिवाहन ।
ततो देहि बहून् व्रीहीन् अकृष्टा येच कृष्टजाः ॥ ७४ ॥
धनधान्य गृहान् पुत्रान् देहि देव दयानिधे ।
त्वमाश्रितेष्टदत्वेन कर्णाभ्यां भूरिविश्रुवम् ॥ ७५ ॥
भक्तेभ्यो मुचुकुन्दाख्य प्रमुखेभ्यो यथा गुह ।
प्रादास्तथा देहि मह्यं अच्युतां बहुलां श्रियम् ॥ ७६ ॥
भक्तान् तत्पुत्र सुहृदः तन्मातृपितृसोदरान् ।
पाहि स्कन्द पुनश्चास्य द्विपादो ये चतुष्पदः ॥ ७७ ॥

चोर व्याघ्र पिशाचाखु सर्पकीटादिबाधकात् ।
भक्तान्निशासु संरक्षन् त्रिषु लोकेषु जागृहि ॥ ७८ ॥
दानवेष्वपि दैत्येषु राक्षसेष्वप्यरातिषु ।
पिशाचेष्वपि गाङ्गेय विक्रमस्व महां असि ॥ ७९ ॥
आधिभिर्व्याधिभिश्चैव पीडिताना महर्निशम् ।
दूनानां वपुषि स्वामिन् आसुवोर्जमिषं च नः ॥ ८० ॥
अति तीव्रेण तपसा तप्यमाना अहर्निशम् ।
उपासत त्वां तप्ताद्याः अथहैनं पुरषयः ॥ ८१ ॥
ध्यानावाहन पूजेज्या परिचर्यास्तुतिष्वहम् ।
अज्ञो मे सफलां पूजां कृणुहि ब्रह्मणस्पते ॥ ८२ ॥
असुरान् राक्षसान् क्रूरान् देवयज्ञविघातकान् ।
जहि देवेश यस्मात्त्वं रक्षोहामीवचातनः ॥ ८३ ॥
दुर्वृत्तेभ्यो धनं दत्से नीचेभ्योपि धनं बहु ।
न ददासि कुतो मह्यं एतत् पृच्छामि संप्रति ॥ ८४ ॥
मुखैरेतान् महा रौद्रान् दूरीकुरु जगत्पते ।
मम स्वमभिकांक्षन्ते ये स्तेना ये च तस्कराः । ८५ ॥
गुहत्वत्पादभक्तानां गेहे जाग्रत्वहर्निशम् ।
वीरबाहुमुखावीरा नित्यास्तेऽनुचरास्तव ॥ ॥
त्रिषड्विलोचनेष्वेकदृक्कटाक्षेण लक्षयन् ।
आढ्यं करोतु मां स्कन्दः पर्जन्यो वृष्टिमानिव ॥ ८७ ॥

भयानकासुरानीक कान्दिशीकाः पुरा खलु ।
गुह त्वां शरणं प्रापुः इन्द्रेण सहदेवताः ॥ ८८ ॥
त्वामेव कीर्तयन् देव ध्यायन् शृण्वन् प्रपूजयन् ।
गुह त्वत्पादभक्तोऽहं जीवानि शरदश्शतम् ॥ ८९ ॥
कृपादुग्धाब्धिकल्लोलायमानापाङ्गवीक्षण ।
देहि मे गुह ब्रह्मायुः दीर्घायुत्वस्येहेशिषे ॥ ९० ॥
पुराराती क्षणपयःपारावारसुधाकर ।
षड्वक्त्र देहि कृपया मयि मेधां मयि प्रजाम् ॥ ९१ ॥
भक्तचातकबृन्देष्टवर्षिधाराधर प्रभो ।
अस्मान् सञ्जीवय स्वामिन् अस्मिन् लोके शतं समाः ॥९२॥
भीतावयं महासेन पथि दुर्गे वने यतः ।
चोर व्याघ्र पिशाचेभ्यः ततो नो अभयं कृधि ॥ ९३ ॥
व्याधयश्शूल कुष्टार्शः प्रमेहाद्या यतस्सदा ।
पीडयन्ति पिशाचाद्याः ततो नो धेहि भेषजम् ॥ ९४ ॥
त्वदीय पाद कमल ध्यान वर्मित विग्रहान् ।
कुहका मोहकाक्षुद्राः मास्मान् प्रापन्नरातयः ॥ ९५ ॥
धनधान्यपशुक्षेत्र बलेष्वस्मदपेक्षया ।
देवसेनापतेऽस्माकं अधरे सन्तु शत्रवः ॥ ९६ ॥
अरातिकुलनिर्मूलनालंकर्मीणविक्रम ।
अकारणेन बहुधा योनो द्वेष्टि स रिष्य तु ॥ ९७ ॥

मन्त्रैर्यन्त्रैस्तथा तन्त्रै रौषधै रायुधैरपि ।
जिघांसति च योऽस्मान् सः द्विषन्मे बहुशोच तु ॥ ९८ ॥
आखण्डलारीनसुरान् त्वं हि स्पर्धावतो यथा ।
जहि गाङ्गेय तौ मर्त्यौ यं चाहं द्वेष्टियश्चमाम् ॥ ९९ ॥
त्वन्नामकीर्तनपरक्षेमङ्करकराम्बुज ।
तमिमं संहर स्वामिन् यश्च नो द्वेषते जनः ॥ १०० ॥
दूरेऽन्तिके वा यश्शत्रुः अस्माननपराधिनः ।
शपत्येनं जहि स्कन्द यश्चनश्शपतश्शपात् ॥ १०१ ॥
चक्षुषा मनसा वाचा मन्त्रेण हवनेन च ।
तत्कृत्यान्नाशय स्वामिन् भ्रातृव्यस्याभिदासतः ॥ १०२ ॥
मच्छिद्रान्वेषिणश्शत्रोः धनमायुः प्रजाः पशून् ।
सर्वान् नाशय शूरघ्न मातस्योच्छेषि किञ्चन ॥ १०३ ॥
अविद्वांसश्च विद्वांसः स्वप्ने जाग्रति वा गुह ।
तेभ्यो मोचय मां यद्यत एनांसि चकृमावयम् ॥ १०४ ॥
वयमूचिम यद्देव जिह्वया देवहेळनम् ।
एनसो मोचयाग्नेय त्वं हि वेत्थ यथा तथम् ॥ १०५ ॥
वित्तार्थे वा तथान्यार्थे विप्रार्थे गोर्थ एव वा ।
पुनीह्यस्मान् ततस्स्कन्द यत्किंचानृतमूदिम ॥ १०६ ॥
तमागसं क्षमस्व त्वं स्वकीयाभीष्टलिप्सया ।
संप्रार्थ्य तुभ्यं वाऽन्यस्मै यद्व चानृतमूदिम ॥ १०७ ॥

सौन्दर्यवल्यासहित मम्बया देवसेनया ।
महासेनं भजे देवं सत्येन तपसा सह ॥ १०८ ॥
यो वै पठेद्गुहस्यैनं वेदान्तस्तवमादरात् ।
स्कान्दाः कटाक्षास्तस्योच्चैः आयुः कीर्तिं प्रजां ददुः ॥१०९॥

स्कन्दस्यैनं वेदपादस्तवं यो
भक्त्या नित्यं श्रावयेद्वा पठेद्वा ।
भूयासुस्ते तस्य मर्त्यस्य शीघ्रं
ये ये कामा दुर्लभा मर्त्य लोके ॥ ११० ॥

॥ इति स्कन्द वेदपादस्तवः संपूर्णः ॥



## ॥ श्री सुब्रह्मण्य षोडश नाम स्तोत्रम् ॥

सुब्रह्मण्यं प्रणम्याहं सर्वज्ञं सर्वगं सदा ।
अभीप्सितार्थसिद्ध्यर्थं प्रवक्ष्ये नाम षोडश ॥ १ ॥

प्रथमो ज्ञानशक्त्यात्मा द्वितीयो स्कन्द एव च ।
अग्निभूश्च तृतीयस्याद्बाहुळेयश्चतुर्थकः ॥ २ ॥

गाङ्गेयः पञ्चमो विद्यात् षष्टश्शरवणोद्भवः ।
सप्तमः कार्तिकेय स्स्यात् कुमारस्यादथाष्टमः ॥ ३ ॥

नवमः षण्मुखश्चैव दशमः कुक्कुटध्वजः ।
एकादशः शक्तिधरो गुहो द्वादश एव च ॥ ४ ॥

त्रयोदशो ब्रह्मचारी षाण्मातुरश्चतुर्दशः ।
क्रौञ्चभित् पञ्चदशकः षोडशश्शिखि वाहनः ॥ ५ ॥

एतत्षोडश नामानि जपेत्सम्यक् सदाऽदरम् ।
विवाहे दुर्गमे मार्गे दुर्जये च तथैव च ॥ ६ ॥

कवित्वे च महाशास्त्रे विज्ञानार्थी फलं लभेत् ।
कन्यार्थी लभते कन्यां जयार्थी लभते जयम् ॥ ७ ॥

पुत्रार्थी पुत्रलाभं च धनार्थी लभते धनम् ।
आयुरारोग्यवश्यं च धनधान्यशुभानिच ॥ ८ ॥

**॥ इति श्री सुब्रह्मण्य षोडश नाम स्तोत्रं संपूर्णम् ॥**

## ॥ सुब्रह्मण्य मङ्गळाष्टकम् ॥

श्रीमद्गौरीसुतायास्तु श्रितमन्दार शाखिने ।
शिखिवर्यतुरङ्गाय सुब्रह्मण्याय मङ्गळम् ॥ १ ॥
भक्ताभीष्टप्रदायाऽस्तु भवरोगविनाशिने ।
भवानीप्रियपुत्राय रणधीराय मङ्गळम् ॥ २ ॥
शूरपद्मादिदनुज तमिस्रकुल भानवे ।
तारकासुरसंहार नर्मशीलाय मङ्गळम् ॥ ३ ॥
वल्ली वदन राजीव मधुपाय महौजसे ।
उल्लसन्मणि कोटीर भासुरायास्तु मङ्गळम् ॥ ४ ॥
कोटि कन्दर्प लावण्य निधये काम दायिने ।
खेटकादि धनुश्शक्तिधराय शुभमङ्गळम् ॥ ५ ॥
मुक्ताहार लसत्कण्ठ राजये मुक्तिदायिने ।
व्यक्तरूपाय विगत विकारायास्तु मङ्गळम् ॥ ६ ॥
कनकाम्बर संराजत् कमनीयाङ्गधारिणे ।
सनकादि महायोगि संस्तुतायास्तु मङ्गळम् ॥ ७ ॥
शरकानन युक्ताम्बुनिधि शीतळ भानवे ।
सरोजभव पूज्याङ्घ्रि कमलायास्तु मङ्गळम् ॥ ८ ॥
मङ्गळाशासनमिदं सुब्रह्मण्यस्य मानवः ।
यः पठेत् सततं भक्त्या लभते धनसंपदः ॥ ९ ॥

॥ इति श्री सुब्रह्मण्य मङ्गळाष्टकं संपूर्णम् ॥

---

**Under preparation —**

(1) Sri Thripurasundari Vedapada Sthothram.

(2) Sri Datta Vedapada Sthuthi.

**Books now available :—**

(1) Sri Vedapadasthava of Jaimini.
[Edited with a critical introduction and a running translation into Tamil and English.] ... **each Rs. 1-25**

(2) Sri Skanda Vedapadasthava.
[Edited with a critical introduction and a running translation into Tamil and English.] ... **each Re. 1-00**

**Copies of the above available of :—**

(1) Sri A. Subramania Sastry,
Book & Photo-seller,
Sri Sringeri Mutt,
Sringeri, Kadur Dt. (Mysore State)

(2) The Provision Stores,
Raja Street, Coimbatore

(3) The Swatantra Agencies,
6, Agraharam St., Shevapet, Salem-2.

(4) Sri S. Ganapathy,
(Burma Govt Pensioner),
15, Balagopalapuram St., Pollachi.

Bharati Vijayam Press, Triplicane.